अथ

# पञ्च सूक्तानि

[ पुरुषसूक्त–विष्णुसूक्त–नारायणसूक्त–
श्रीसूक्त–लक्ष्मीसूक्तानि ]

चतुर्थं संस्करणम् ] [ मूल्यम्

विविध-पुस्तक-प्राप्तिस्थानम्—

# मास्टर खेलाड़ीलाल ऐण्ड सन्स,

## संस्कृत बुकडिपो,

कचौड़ीगली, बनारस सिटी ।

---

इदं पुस्तकं काश्यां मास्टर खेलाड़ीलाल ऐण्ड सन्स इत्यस्य जे. एन. यादव महोदयैः
कृ० व० पावगी द्वारा काश्यां रामचन्द्र हितचिन्तकनाम्नि यन्त्रालये
मुद्रयित्वा प्राकाश्यं नीतम् ।

श्रीगणेशाय नमः ॥ अथ पुरुषसूक्तम् ॥
हरिः ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ स भूमिᳬं सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुष एवेदᳬं सर्वं यद्भूतं यच्च भाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि॥३॥त्रिपादूर्ध्व उदैत्पुरुषःपादोऽस्येहाऽभवत्पुनः ॥ ततो विष्वङ्व्यक्रामत्साश-

पु० नानशनेऽअभि॥४॥ततो व्विराडजायत व्विराजो मू०
॥१॥ अधिपूरुषः॥स जातोऽअत्यरिच्यत पश्चाद्भूमिमथो
पुरः॥५॥ यत्पुरुषेण हविषा देवा यज्ञमतन्न्वत ॥
व्वसन्तोस्यासीदाज्ज्यङ्ग्रीष्मऽइध्मः शरद्धविः
॥६॥ तं यज्ञं बर्हिषि प्रौक्षन्न्पुरुषञ्जातमग्ग्रतः ॥
तेन देवाऽअयजन्त साद्ध्याऽऋषयश्च ये ॥ ७ ॥
तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् ॥
पशूँस्ताँश्चक्रे व्वायव्यानारण्याग्ग्राम्याश्च ये ॥८॥
तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानि जज्ञिरे ॥ ॥१॥

छन्दां॑सि जज्ञिरे तस्माद्यजुस्तस्मांदजायत॥९॥
तस्मादश्वांऽअजायन्त ये के चोंभयादंतः॥गावों-
ह जज्ञिरे तस्मात्तस्मांज्जाताऽअंजावयं॑॥१०॥
यत्पुरुंषं व्व्यदंधुः कतिधा व्व्यंकल्पयन्॥ मुख-
ङ्किमंस्यासीत्किं वाहू किमूरू पादांउच्च्येते॥११॥
ब्राह्मणोऽस्स्य मुखंमासीद्वाहू रांजन्न्यं॑ कृतः॥
ऊरू तदंस्य यद्वैश्यं॑ पद्भ्याᳪशूद्रोऽअंजायत॥१२॥
चन्द्रमा मनंसो जातश्चक्षोः सूय्र्योंऽअजायत॥
मुखादिन्द्रंश्चाग्निश्चं प्राणाद्वायुरजांयत॥१३॥

नाभ्याऽआसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समव-
र्तत ॥ पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथा लोकाँ २ ॥
ऽअकल्प्पयन् ॥ १४ ॥ सप्तास्स्यासन्न्परिध-
यस्त्रिः सप्त समिधः कृताः ॥ देवा यद्यज्ञन्त-
न्वानाः अबध्नन्न्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेन
यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्न्या-
सन् ॥ ते ह नाकम्महिमानः सचन्त यत्र पूर्वे
साद्ध्याः सन्ति देवाः ॥ १६ ॥

इति श्री पुरुषसूक्तं समाप्तम् ।

# अथ विष्णुसूक्तम् ।

विष्णवे नमः ॥ विष्णोर्नु कं वीर्य्याणि प्रवोचं
यः पार्थिवानि विममे रजांꣳसि । यो अस्कं-
भायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥१॥
प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः
कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रम-
णेष्वधिक्षियन्ति भुवनानि विश्वा ॥२॥ विष्णो-
रराटमसि विष्णोः पृष्ठमसि विष्णोश्श्नप्त्रेस्थो
विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि वि-

ष्णवे त्वा ॥ ३ ॥ प्र विष्णवे शूषमेतु मन्म गिरि-
क्षित उरुगायाय वृष्णे । य इदं दीर्घं प्रयतं सध-
स्थमेको विममे त्रिभिरित्पदेभिः ॥ ४ ॥ इदं
विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य
पा॑ᳲसुरे त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः
॥ ५ ॥ यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा
स्वधया मदन्ति । य उ त्रिधातु पृथिवीमुत द्यामेको
दधार भुवनानि विश्वा ॥ ६ ॥ तदस्य प्रियमभि
पाथो अश्यां नरो यत्र देवयवो मदन्ति । उरुक्र-

मस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥७॥ ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥८॥

इति श्री विष्णुसूक्तं समाप्तम् ।

## अथ नारायणसूक्तम् ।

सहस्रशीर्षं देवं विश्वाक्षं विश्वशं भुवम् । विश्वं नारायणं देवमक्षरं परमं प्रभुम् । विश्वतः परम नित्यं विश्वं नारायणꣳहरिम् । विश्वमेवेदं पुरुष-

ना० स्तद्विश्वमुपजीवति । पतिं विश्वस्यात्मेश्वरꣳ शा- मू०
॥४॥ श्वतꣳ शिवमच्युतम् । नारायणं महाज्ञेयं विश्वा-
त्मानं परायणम् । नारायणः परं ब्रह्म तत्त्वं नारायणः
परः । नारायणः परो ज्योतिरात्मा नारायणः परः ॥
नारायणपरो ध्याता ध्यानं नारायणः परः । यच्च कि-
ञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च
तत्सर्वं व्याप्य नारायणः स्थितः ॥ १ ॥ अनन्त-
मव्ययं कविꣳ समुद्रेऽन्तं विश्वशंभुवम् । ॥४॥
पद्मकोशप्रतीकाशꣳ हृदयं चाप्यधोमुखम् । अथो

निष्ट्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् । सन्ततञ्च शिराभिस्तु लम्बत्या कोशसन्निभम् । तस्यान्ते सुषिरञ्च सूक्ष्मं तस्मिन्त्सर्वं प्रतिष्ठितम् । तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः । सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः । तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य सन्तताः । संतापयति स्वं देहमापादतलमस्तकम् । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता ॥ २ ॥ नीलतोयद-

मध्यस्था विद्युल्लेखेव भास्वरा । नीवारशूकव
त्तन्वी पीता भास्वत्यणूपमा । तस्याः शिखाया
मध्ये परमात्मा व्यवस्थितः । स ब्रह्म स शिवः
(स हरिः) सेन्द्रः सोऽक्षरः परमस्स्वराट् ॥ ३ ॥
ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः ॥ ४ ॥
ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो
विष्णुः प्रचोदयात् ॥ ५ ॥

इति श्री नारायणसूक्तं समाप्तम् ।

## अथ श्रीसूक्तम् ।

श्रीगणेशाय नमः ॥ ॐ हिरंण्यवर्णां हरिंणीं सुवर्णरजतस्रंजाम् ॥ चन्द्रां हिरण्मयीं लक्ष्मीं जातंवेदो म आवंह ॥ १ ॥ तां म आवंह जातवेदो लक्ष्मीमनंपगामिनीम् ॥ यस्यां हिरंण्यं विन्देयं गामश्वं पुरुंषानहम् ॥ २ ॥ अश्वपूर्वां रंथमध्यां हस्तिनांदप्रबोधिंनीम् ॥ श्रियं देवीमुपंह्वये श्रीर्मां देवीजुंषताम् ॥ ३ ॥ कां सोस्मि तां हिरंण्यप्राकारां-मार्द्रां ज्वलंन्तीं तृप्तां तर्पयंन्तीम् ॥ पद्मे स्थितां

पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥ चन्द्रां प्रभा-
सां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्॥
तां पद्मनीमीं शरणं प्रपद्येऽलक्ष्मीर्मे नश्यतां
त्वां वृणे ॥५॥ आदित्यवर्णे तपसोऽधिजातो
वनस्पतिस्तव वृक्षोऽथ बिल्वः ॥ तस्य फलानि
तपसा नुदन्तु मायान्तरायाश्च बाह्याऽअलक्ष्मीः
॥६॥ उपैतु मां देवसखः कीर्तिश्च मणिना
सह ॥ प्रादुर्भूतो सुराष्ट्रेऽस्मिन्कीर्तिमृद्धिं
ददातु मे ॥७॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं

नांशयाम्याम्यहम् ॥ अभूंतिमसंमृद्धिं च सर्वां
निर्णुद मे गृहात् ॥ ८ ॥ गन्धद्वारां दुराधर्षां
नित्यपुंष्टां करीषिणींम् ॥ ईश्वरीं ꣳ सर्वंभूतानां
तामिहोपंह्वये श्रियंम् ॥९॥ मनंसः काममाकूंतिं
वाचः सत्यमंशीय । पशूना ꣳ रूपंमन्नस्य मयि
श्रीः श्रंयतां यशंः ॥ १० ॥ कर्दमेन प्रंजा भूता
मयि संम्भव कर्दम ॥ श्रियं वासयं मे कुले मातरं
पद्ममालिंनीम् ॥११॥ आपः सृजन्तु स्निग्धानि
चिक्लीत वंस मे गृहे ॥ नि चं देवीं मातरं श्रियं

श्री वासयं मे कुले ॥१२॥ आर्द्रां पुष्करिणीं पुष्टीं पिङ्गलां मू०
॥७॥ (सुवर्णां हेम) पद्ममालिनीम् चन्द्रां हिरण्मयीं
लक्ष्मीं जातवेदो म आवह ॥१३॥ आर्द्रां यः करिणीं
यष्टिं सुवर्णां हेममालिनीम् ॥ सूर्यां हिरण्मयी लक्ष्मीं
जातवेदो म आवह ॥१४॥ तां मऽआवह जात-
वेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं प्रभूत
गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥१५॥ यः
शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ॥ सूक्तं
पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ १६ ॥ ॥७॥



इति श्री श्रीसूक्तं समाप्तम् ।

# अथ लक्ष्मीसूक्तम् ।

श्रीः ॥ सरसिजनिलये सरोजहस्ते धवल-
तरांशुकगन्धमाल्यशोभे ॥ भगवति हरिवल्लभे
मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ १ ॥
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ॥ धनमिन्द्रो
बृहस्पतिर्वरुणं धनमस्तु मे ॥ २ ॥ वैनतेय सोमं
पिब सोमं पिबतु वृत्रहा ॥ सोमं धनस्य सोमिनो
मह्यं ददातु सोमिनः ॥ ३ ॥ न क्रोधो न च
मात्सर्यं न लोभो नशुभा मतिः ॥ भवन्ति

कृतंपुण्यानां भक्तानां सूक्तजापिनाम् ॥ ४ ॥
 पद्मानने पंद्म ऊरु पद्माक्षिं पद्मसम्भंवे ॥ तन्में
भजासिं पद्माक्षि येन सौख्यं लभाम्यहम् ॥ ५ ॥
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ॥
विष्णुप्रियां सखीं देवीं नमाम्यच्युतवल्लभाम् ॥६॥
महालक्ष्म्यै चं विद्महे विष्णुपत्न्यै चं धीमहि ॥
तन्नो लक्ष्मीः प्रचोदयांत् ॥ ७ ॥ पद्मानने पद्मिनि
पंद्मपत्रे पद्मंप्रिये पद्मदलायताक्षि ॥ विश्वप्रिये 
विश्वमनोऽनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व

॥ ८ ॥ आनन्दः कर्दमश्चैव चिक्लीत इति विश्रुताः ॥ ऋषयस्ते त्रयः प्रोक्तास्स्वयं श्रीरेव देवता ॥ ९ ॥ ऋणरोगादिदारिद्र्यं पापञ्च अपमृत्यवः ॥ भयशोकमनस्तापा नश्यन्तु मम सर्वदा ॥ १० ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते ॥ धनं धान्यं पशुं वहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ ११ ॥

इति श्री लक्ष्मीसूक्तं समाप्तम् ।

---

श्री तुलसीरामशर्मणा संस्कृतम् ।

